* दीधितिः *

नचैवं नरशिरःकपालं शुचि प्राण्यङ्गत्वादित्यादिनाप्यागमप्रतिरोधः स्यात्, तत्रानुकूलतर्काभावेन बलवत्त-

* गादाधरी *

एवम्=शाब्दबुद्धौ बाध-तदभावव्याप्यवत्ताज्ञानयोः प्रतिबन्धकत्वे। नरशिरःकपालमिति। नरशिरःकपालस्य शुचित्वानुमापकेन तद्धर्मिकप्राण्यङ्गत्वपरामर्शेन स्वतः फलद्वारा चागमजन्याशौचबोधविरोधः स्यादित्यर्थः। स चानुभवविरुद्धः, तत्र प्राण्यङ्गत्वज्ञानदशायामपि शाब्दाशौचज्ञानस्यानुभवसिद्धत्वादिति भावः।

समाधत्ते तत्रेति। तादृशाशौचज्ञानप्राक्काल इत्यर्थः। अनुकूलतर्का-

* चन्द्रकला *

अशुचित्वव्याप्यप्राण्यङ्गत्ववत् नरशिरःकपालम् इत्याकारकपरामर्शदशायां निरुक्तपरामर्शजन्यतादृशाशुचित्वनिश्चयरूपानुमितिदशायां वा तादृशनिश्चयाव्यवहितोत्तरक्षणे सर्वानुभवसिद्धस्य चितिं च चितिकाष्ठञ्च मृताङ्गश्चेत्याद्यागमजन्यस्य कर्मानधिकारप्रयोजकस्पर्शाभावस्वरूपाशुचित्वबोधस्य उत्पाद एव न स्यात्, पूर्वमशुचित्वव्याप्यत्वादिनिश्चयस्य शाब्दादिप्रतिबन्धकस्य सत्त्वादिति दीधितिकृता शंकायं प्रदर्शयति एवमित्यादि।

तद्धर्मिकेति। तादृशकपालधर्मिकेत्यर्थकम्। स्वतः=तादृशपरामर्शतः। परामर्शसत्त्वदशायां बाधकान्तरविरहेणावश्यमेव कार्यमुत्पद्यते इत्यत आह फलद्वारा वेति। तादृशपरामर्शजन्याशुचित्वानुमितिद्वारा वेत्यर्थः। स च=आगमजन्याऽशुचित्वबोधश्च।

केवल नरशिरःकपाले प्राण्यङ्गत्वज्ञानमात्रन्तु नाशुचित्वशाब्दबोधं प्रतिबध्नाति अपितु शुचित्वव्याप्तिविशिष्टप्राण्यङ्गत्वस्य कपालादौ ज्ञानमेव तथा, एवञ्चागमजन्याशुचित्वबोधात् पूर्वं अनुकूलतर्काभावेन बलवत्प्रमाणागमस्य सत्त्वेन च प्राण्यङ्गत्वादौ शुचित्वव्याप्तिनिश्चय एव न भवति, व्याप्तिनिश्चयाभावे शुचित्वानुमितेरप्यनुदयेन अशुचित्वबोधात् पूर्वं शुचित्वस्याशुचित्वाभावव्याप्यनिश्चयस्य तज्जन्यस्य अशुचित्वाभावरूपशुचित्वात्मकबाधनिश्चयस्य चोत्पादाऽसम्भवात् प्रतिबन्धकाभावेनागमजन्यबोधः सम्भवत्येवेत्याह समाधत्ते इति।

तादृशेति आगमजन्येत्यर्थकम्। अनुमितेः पूर्वमेव बलवदागमजन्याशुचित्वबोधस्योत्पत्त्या तेनैव प्रतिबन्धादुत्तरकाले न शुचि-

• चिन्तामणिः •

यद्वा प्रत्यक्षादौ बाधेन न ज्ञानं प्रतिबध्यते, किन्तूत्पन्नज्ञानेऽप्रामाण्यं ज्ञाप्यते, अनुमितौ तूत्पत्तिरेव प्रतिबध्यते। ते च सव्यभिचारविरुद्धसत्प्रतिपक्षाऽसिद्धबाधिताः पञ्च।

इति श्रीमद्गङ्गेशोपाध्यायविरचिते तत्त्वचिन्तामणौ अनुमानाख्यद्वितीयखण्डे हेत्वाभाससामान्यनिरुक्तिः समाप्ता।

---

• दीधितिः •

यद्वेत्याद्यभ्युपगममात्रं प्रत्यक्षं प्रत्यानुमानिकबाधादिनिश्चयस्याप्रतिबन्धकत्वेऽपि शाब्दं प्रति प्रतिबन्धकत्वात्। योग्यताज्ञानेनान्यथासिद्धत्वात्

• गादाधरी •

निर्भरमाह यद्वेत्यादीति। नन्वानुमानिकबाधादिनिश्चयदशायामपि लौकिकसन्निकर्षादितः प्रत्यक्षनिश्चयोत्पत्त्या बाधनिश्चयसामान्यस्य प्रत्यक्षप्रतिबन्धकत्वं न सम्भवतीत्यनुमित्यसाधारणप्रतिबन्धकत्वं बाधनिश्चयत्वावच्छिन्नस्याक्षतमतो यद्विषयकनिश्चयत्वेनानुमित्यसाधारणप्रतिबन्धकत्वं तद्वत्त्वस्य लक्ष्यताप्रयोजकत्वाभिप्रायेण यद्वेत्यादिग्रन्थस्य बाधे लक्ष्यतोपपादकत्वं सुसङ्गच्छते इत्यत आह प्रत्यक्षं प्रतीति।

समानेन्द्रियजन्यबाधनिश्चयसत्त्वे लौकिकप्रत्यक्षस्याप्यनुत्पत्तेरानुमानिकेति बाधनिश्चयविशेषणम्। शाब्दं प्रतीति। तथाच तावतैव लिङ्गासाधारणदोषत्वव्याघात इति भावः।

तत्रापि तदप्रतिबन्धकत्वमाशङ्कते योग्यतेति। अन्यथासिद्धत्वादिति। बाधादिनिश्चयदशायां योग्यताज्ञानरूपकारणविरहेणैव शाब्दबोधानुत्पाद-

• चन्द्रकला •

प्रत्यक्षप्रतिबन्धकत्वमसम्भवि, आनुमानिकबाधनिश्चयदशायाम् प्रत्यक्षोत्पादस्यावश्यकत्वादिति बाधादेः अनुमितिमात्रविरोधितया तस्य लिङ्गासाधारणदोषत्वं निर्विवादमिति तु न शक्यम्, शाब्दं प्रति बाधादेर्विरोधित्वादेव तस्यानुमितिमात्राविरोधित्वात् इति दीधितिकाराशयं प्रदर्शयति तथाचेति।

तावतैव = शाब्दं प्रति बाधादिनिश्चयस्य प्रतिबन्धकत्वादेव। तत्रापि = शाब्दबोधेऽपि। शाब्दबोधानुत्पादेति। बाधादिनिश्चयस्यैव योग्यताज्ञानप्रतिबन्धकत्वादित्याशयः।

॥ दीधितिः ॥

तदभावो न तत्र हेतुरिति चेदेवमप्युपनीतभानविशेषं प्रति तत्त्वेन हेतुताया दुर्वारत्वात् ।

इति महामहोपाध्याय—श्रीरघुनाथशिरोमणिभट्टाचार्य्यविरचिता हेत्वाभासे सामान्यनिरुक्तिदीधितिः समाप्ता ।

---

• गादाधरी •

निर्व्वाहादिति भावः । तदभावः = बाधादिनिश्चयाभावः, तत्र = शाब्दबुद्धौ । यद्यपि योग्यबाधसंशयद्वितीयक्षणे स्मरणाद्यात्मकयोग्यतानिश्चये सति तद्द्वितीयक्षणे शाब्दज्ञानवारणाय तदभावस्य शाब्दबोधहेतुत्वस्यावश्यकत्वम्, तथापि बाधादिज्ञानस्य शाब्दाप्रतिबन्धकत्वेऽपि निर्विवादोपनीतभाने विशेषप्रतिबन्धकतयैव बाधादेर्लिङ्गासाधारणदोषत्वनिराकरणासम्भवात्तन्नैव तन्निराकरोति एवमपीति । उपनीतभानविशेषम् = दोषविशेषाजन्योपनीतभानविशेषम्, तत्त्वेन = बाधनिश्चयाद्यभावत्वेन । दुर्व्वारत्वादिति । बाधादिनिश्चयदशायामनुमितेरिव तादृशोपनीतभानानुदयस्य सर्व्वानुभवसिद्धत्वादिति भावः ।

इति महामहोपाध्याय—श्रीगदाधरभट्टाचार्य्यविरचिता हेत्वाभाससामान्यनिरुक्तिदीधितिविवृतिः समाप्ता ।

---

• चन्द्रकला •

योग्यतासंशयस्य ग्राह्यसंशयात्मकतया तस्य प्रत्यक्षादिप्रतिबन्धकत्वात् स्मरणाद्यात्मकेति । आदिना आनुमानिकबाधादिनिश्चयपरिग्रहः । तदभावस्य = बाधादिनिश्चयाभावस्य ।

तथापि बाधादेर्न लिङ्गाऽसाधारणदोषत्वम्, उपनीतभानं प्रति तस्य प्रतिबन्धकत्वादित्यादिदीधितिं व्याचष्टे तत्त्वेनेति । तादृशोपनीतेति दोषविशेषाजन्योपनीतेत्यर्थकम्, अन्यत् सुगममितिदिक् ।

इति श्रीमदुदासीनपरमहंसपरिव्राजकाचार्यवर्य श्रीमत्स्वामिमयारामदासभगवत्पादशिष्य - समस्तभारतवर्षप्रसिद्ध-सिन्धुमहानदान्तर्वर्ति - श्रीसाधुबेलातीर्थपीठाधीशपदभाक्समभाषपारावारीण-स्वामिश्रीहरिनामदासविरचिता हेत्वाभाससामान्यनिरुक्तिचन्द्रकला टीका समाप्ता ।





• चिन्तामणिः •

यद्वा प्रत्यक्षादौ बाधेन न ज्ञानं प्रतिबध्यते, किन्तूत्पन्नज्ञानेऽप्रामाण्यं ज्ञाप्यते, अनुमितौ तूत्पत्तिरेव प्रतिबध्यते।

ते च सव्यभिचारविरुद्धसत्प्रतिपक्षाऽसिद्धबाधिताः पञ्च।

इति श्रीमद्गङ्गेशोपाध्यायविरचिते तत्त्वचिन्तामणौ
अनुमानाख्यद्वितीयखण्डे हेत्वाभास-
सामान्यनिरुक्तिः समाप्ता।

---

• दीधितिः •

यद्वेत्याद्यभ्युपगममात्रं प्रत्यक्षं प्रत्यानुमानिकबाधादिनिश्चयस्याप्रतिबन्धकत्वेऽपि शाब्दं प्रति प्रतिबन्धकत्वात्। योग्यताज्ञानेनान्यथासिद्ध यान्

• गादाधरी •

निर्भरमाह यद्वेत्यादीति। नन्वानुमानिकबाधादिनिश्चयदशायामपि लौकिकसन्निकर्षादितः प्रत्यक्षनिश्चयोत्पत्त्या बाधनिश्चयसामान्यस्य प्रत्यक्षप्रतिबन्धकत्वं न सम्भवतीत्यनुमित्यसाधारणप्रतिबन्धकत्वं बाधनिश्चयत्वावच्छिन्नस्याज्ञावमतो यद्विषयकनिश्चयत्वेनानुमित्यसाधारणप्रतिबन्धकत्वं तद्वत्त्वस्य लक्ष्यताप्रयोजकत्वाभिप्रायेण यद्वेत्यादिग्रन्थस्य बाधे लक्षणो पपादकत्वं सुसङ्गच्छते इत्यत आह प्रत्यक्षं प्रतीति।

समानेन्द्रियजन्यबाधनिश्चयसत्त्वे लौकिकप्रत्यक्षानिकेति बाधनिश्चयविशेषणम्। शाब्दं प्रतीति। लिङ्गासाधारणदोषत्वव्याघात इति भावः।

तत्रापि तदप्रतिबन्धकत्वमाशङ्कते योग्यतेति। अन्य बाधादिनिश्चयदशायां योग्यताज्ञानरूपकारणविरहेणैव इ

• चन्द्रकला •

प्रत्यक्षप्रतिबन्धकत्वमसम्भवि, आनुमानिकबाधनिश्चयदशायाम् वश्यकत्वादिति बाधादेः अनुमितिमात्रविरोधितया तस्य लि निर्विवादमिति तु न वक्यम्, शाब्दं प्रति बाधादेर्विरोधित्वादेव त विरोधित्वात् इति दीधितिकाराशयं प्रदर्शयति तथाचेति।

तावतैव = शाब्दं प्रति बाधादिनिश्चयस्य प्रतिबन्धकत्वादेव। त बोधेऽपि। शाब्दबोधानुत्पादेति। बाधादिनिश्चयस्यैव योग्यता कत्वादित्याशयः।

॥ दीधिति ॥

तदभावो न तत्र हेतुरिति चेदेवमप्युपनीतभानविशेषं प्रति तत्त्वेन हेतुताया दुर्वारत्वात् ।

इति महामहोपाध्याय—श्रीरघुनाथशिरोमणिभट्टाचार्य्यविरचिता हेत्वाभासे सामान्यनिरुक्तिदीधिति समाप्ता ।

* गादाधरी *

*निर्व्वाहादिति भाव ।* तदभाव = बाधादिनिश्चयाभाव, तत्र = शाब्दबुद्धौ । यद्यपि योग्यबाधसशयद्वितीयक्षणे स्मरणात्मकयोग्यतानिश्चये सति तद्द्वितीयक्षणे शाब्दज्ञानवारणाय तदभावस्य शाब्दबोधहेतुत्वस्यावश्यकत्वम्, तथापि बाधादिज्ञानस्य शाब्दाप्रतिबन्धकत्वेऽपि निर्व्विवादोपनीतभाने विशेषप्रतिबन्धकतयैव बाधादेर्लिङ्गासाधारणदोषत्वनिराकरणसम्भवात्तन्नैव तन्निराकरोति एवमपीति । उपनीतभानविशेषम् = दोषविशेषाजन्योपनीतभानविशेषम्, तत्त्वेन = बाधनिश्चयाद्यभावत्वेन । दुर्व्वारत्वादिति । बाधादिनिश्चयदशायामनुमितेरिव तादृशोपनीतभानानुदयादयस्य सर्व्वानुभवसिद्धत्वादिति भाव ।

इति महामहोपाध्याय—श्रीगदाधरभट्टाचार्य्यविरचिता हेत्वाभाससामान्यनिरुक्तिदीधितिविवृति समाप्ता ।

* चन्द्रकला *

योग्यतासंशयस्य माह्यसंशयात्मकतया तस्य प्रत्यक्षादिप्रतिबन्धकत्वात् स्मरणात्मकेति । आदिना आनुमानिकबाधादिनिश्चयपरिग्रह । तदभावस्य = बाधादिनिश्चयाभावस्य ।

तथापि बाधादेर्न लिङ्गाऽसाधारणदोषत्वम् उपनीतप्रत्यक्ष प्रति तस्य प्रतिबन्धकत्वादित्यादिदीधितिं व्याचष्टे तत्त्वेनेति । तादृशोपनीतेति दोषविशेषाजन्योपनीतेत्यर्थकम्, अन्यत् सुगममितिदिक् ।

इति श्रीमदुदासीनपरमहंसपरिव्राजकाचार्यवर्य श्रीमत्स्वामिजयरामदासभगवत्पादशिष्य - समस्तभारतवर्षप्रसिद्ध सिन्धुमहानदान्तर्वर्ति - श्रीसाधुवेलातीर्थाधीशपदवास्यप्रमाणपारावारीण-स्वामिश्रीहरिनामदासविरचिता हेत्वाभाससामान्यनिरुक्ति चन्द्रकला टीका समाप्ता ।

